॥ नवग्रह ध्यान मन्त्राः साधुसङ्कुलि तन्त्रान्तर्गतम् ॥

ग्रहपुरश्चरण प्रयोगः

ॐ रक्तपद्मासनं देवं चतुर्बाहुसमन्वितम् ।
क्षत्रियं रक्तवर्णञ्च गोत्रं काश्यपसम्भवम् ॥

सप्ताश्वरथमारूढं प्रचण्डं सर्वसिद्धिदम् ।
द्विभुजं रक्तपद्मैश्च संयुक्तं परमाद्भुतम् ॥

कलिङ्गदेशजं देवं मौलिमाणिक्यभूषणम् ।
त्रिनेत्रं तेजसा पूर्णमुदयाचलसंस्थितम् ॥

द्वादशाङ्गुल-विस्तीर्णं प्रवरं घृतकौशिकम् ।
शिवाधिदैवं पुर्वास्यं ब्रह्मप्रत्यधिदैवतम् ॥

क्लीं ऐं श्रीं ह्रीं सूर्याय नमः ।

ॐ शुक्लं शुक्लाम्बरधरं श्वेताब्जस्थं चतुर्भुजम् ।
हारकेयूरनूपुरैर्मण्डितं तमसापहम् ॥

सुखदृश्यं सुधायुक्त-मात्रेयं वैश्यजातिजम् ।
कलङ्काङ्कितसर्वाङ्गं केशपाशातिसुन्दरम् ॥

मुकुटेर्मणिमाणिक्यैः शोभनीयं तु लोचनम् ।
योषित्प्रियं महानन्दं यमुनाजलसम्भवम् ॥

उमाधिदैवतं देवमापप्रत्यधिदैवतम् ॥

ह्रीं ह्रीं हुं सोमाय स्वाहा ।

ॐ मेशाधिरूढं द्विभुजं शक्तिचापधरं मुदा ।
रक्तवर्णं महातेजं तेजस्वीनां समाकुलम् ॥

रक्तवस्त्रपरिधानम् नानालङ्कारसंयुतम् ।
रक्ताङ्गं धरणीपुत्रं रक्तमाल्यानुलेपनम् ॥

हस्ते वाराहदशनं पृष्ठे तूणसमन्वितम् ।

कटाक्षाद् भीतिजनकं महामोहप्रदं महत् ॥

महाचापधरं देवं महोग्रमुग्रविग्रहम् ।
स्कन्दादिदैवं सूर्यास्यं क्षितिप्रत्यधिदैवतम् ॥

ह्लीं ॐ ऐं कुजाय स्वाहा ।

ॐ सुतप्तस्वर्णाभतनुं रोमराजिविराजितम् ।
द्विभुजं स्वर्णदण्डेव शरच्चन्द्रनिभाननम् ॥

चरणे रत्नमञ्जीरं कुमारं शुभलक्षणम् ।
स्वर्णयज्ञोपवीतञ्च पीतवस्त्रयुगावृतम् ॥

अत्रिगोत्रसमुत्पन्नं वैश्यजातिं महाबलम् ।
मागधं महिमापूर्णं द्विनेत्रं द्विभुजं शुभम् ॥

नारायणाधिदैवञ्च विष्णुप्रत्यधिदैवतम् ।
चिन्तयेत् सोमतनयं सर्वाभिष्टफलप्रदं ॥

ॐ क्लीं ॐ बुधाय स्वाहा ।

ॐ कनकरुचिरगौरं चारुमूर्तिं प्रसन्नं
द्विभुजमपि सरजौ संदधानं सुरेज्यं ।
वसनयुगदधानं पीतवस्त्रं सुभद्रं
सुरवरनरपुज्यमङ्गिरोगोत्रयुक्तम् ॥

द्विजवरकुलजातं सिन्धुदेशप्रसिद्धं
त्रिजगति गणश्रेष्ठश्चाधिदैवं तदीयम् ।
सकलगिरिनिहन्ता इन्द्रः प्रत्याधिदैवं
ग्रहगणगुरुनाथं तं भजेऽभीष्टसिद्धौ ॥

रं यं ह्लीं ऐं गुरवे नमः ।

ॐ शुक्लाम्बरं शुक्लरुचिं सुदीप्तं
तुषारकुन्देन्दुद्युतिं चतुर्भुजम् ।
इन्द्राधिदैवं शचीप्रत्याधिदैवं
वेदार्थविज्ञं च कविं कवीनाम् ॥

भृगुगोत्रयुक्तं द्विजजातिमात्रं
दितीन्द्रपूज्यं खलु शुद्धिशान्तं ।
सर्वार्थसिद्धिप्रदमेव काव्यं
भजेऽप्यहं भोजकतोद्भवं भृगुम् ॥

हुं हुं श्रीं श्रीं नं रं शुक्राय स्वाहा ।

ॐ सौरिं गृध्रगतातिकृष्णवपुषं कालाग्निवत् सङ्कुलं
संयुक्तं भुजपल्लवैरुपलसत्स्तम्भैश्चतुर्भिः समैः ।
भीमं चोग्रमहाबलातिवपुषं बाधागणैः संयुतं
गोत्रं काश्यपजं सुराष्ट्रविभवं कालाग्निदैवं शनिम् ॥

वस्त्रैः कृष्णमयैर्युतं तनुवरं तं सूर्यसूनुं भजे ॥

ह्रीं क्लीम् शनैश्चराय नमः ।

ॐ महिषस्थं कृष्णं वदनमयविभुं कर्णनासाक्षिमात्रम्
कारालास्यं भीमं गदविभवयुतं श्यामवर्णं महोग्रं ।
पैठीनं गोत्रयुक्तं रविशशीदमनं चाधिदैवं यमोऽपि
सर्पप्रत्यधिदैवतं मलयगीर्भावं तं तमसं नमामि ॥

वं ऐं वं वं क्लीं वं तमसे स्वाहा ।

ॐ महोग्रं धूमाभं करचरणयुतं छिन्नशीर्षं सुदीप्तम्
हस्ते वाणं कृपाणं त्रिशिखशशिधृतं वेदहस्तं प्रसन्नं ।
ब्रह्मा तस्याधिदैवं सकलगदयुतं सर्पप्रत्यधिदैवं ध्यायेत्
केतुं विशालं सकलसुरनरे शान्तिदं पुष्टिदञ्च ॥

श्रीं श्रीं आं वं रं लं केतवे स्वाहा ।